श्रीगणेशायनमः॥ ॥श्रीसीतारामायनमः॥ ततइति सरसांश्रेष्ठंपंपासरः १ विस्मयहेतूनाह क्रोशमात्रमिति अगाधामलशंब
रंनीरक्षीरांबुशंबरमित्यमरः अंबुजंपद्मंकल्हारस्तद्विशेषः एवमुत्पलपदेनकुमुदविशेषोत्र २ हंसादयः पक्षिविशेषाः क्रौंचनादैरुपनादितंप्र
तिध्वनिमत् ३ सतांमनोवत्स्वच्छजलम् ४ उपस्पृश्यस्नात्वा ५ दांतौनिगृहीतेंद्रियौविविधान्वृक्षान्गिरेःशोभांचपश्यंतौ ६ तौददर्श

श्रीमहादेवउवाच ततःसलक्ष्मणोरामःशनैःपंपासरस्तटम् आगत्यसरसांश्रेष्ठंदृष्ट्वाविस्मय
मापयौ १ क्रोशमात्रंसुविस्तीर्णमगाधामलशंबरम् उत्फुल्लांबुजकल्हारकुमुदोत्पलमंडितम् २
हंसकारंडवाकीर्णंचक्रवाकादिशोभितम् जलकुक्कुटकोयष्टिक्रौंचनादोपनादितम् ३ नानापुष्पल
ताकीर्णंनानाफलसमावृतं सतांमनःस्वच्छजलंपद्मकिंजल्कवासितम् ४ तत्रोपस्पृश्यसलिलंपी
त्वाश्रमहरंविभुः सानुजःसरसस्तीरेशीतलेनपथाययौ ५ ऋष्यमूकगिरेःपार्श्वेगच्छंतौरामलक्ष्मणौ
धनुर्बाणकरौदांतौजटावल्कलमंडितौ पश्यंतौविविधान्वृक्षान्गिरेःशोभांसुविक्रमौ ६ सुग्रीवस्तुगिरे
र्मूर्ध्निचतुर्भिःसहवानरैः स्थित्वाददर्शतौयातौआरुरोहगिरेःशिरः ७ भयादाहहनूमंतंकौतौवीरवरौ-
सखे गच्छजानीहिभद्रंतेबटुर्भूत्वाद्विजाकृतिः ८ वालिनाप्रेषितौकिंवामांहंतुंसमुपागतौ ताभ्यांसं
भाषणंकृत्वाजानीहिहृदयंतयोः ९ यदितौदुष्टहृदयौसंज्ञांकुरुकराग्रतः विनयावनतोभूत्वाएवंजानी
हिनिश्चयम् १० तथेतिबटुरूपेणहनुमान्समुपागतः विनयावनतोभूत्वारामंनत्वेदमब्रवीत् कौयु
वांपुरुषव्याघ्रौयुवानौवीरसंमतौ द्योतयंतौदिशःसर्वाःप्रभयाभास्कराविव १२ युवांत्रैलोक्यकर्तारा
वितिभातिमनोमम युवांप्रधानपुरुषौजगद्धेतूजगन्मयौ १३ श्रीसीतारामचंद्राभ्यांनमोनमः ॐ

दृष्ट्वाचभयाद्गिरेःशिरआरुरोहेत्यन्वयः ७ भद्रंतेइतिप्रेरणानिमित्तंआशीर्वादः ८ किंवालिनाप्रेषितौमांहंतुमागतौवापक्षांतरेउतान्यथेति
तयोर्हृदयंसंभाषणंकृत्वाजानीहि अंतःकरणानुरूपत्वाद्वाचःसंभाषणेनतन्निर्णयः ९ संज्ञांकुरु पलायनार्थमितिशेषः एवंसंकेतस्यनि
श्चयंजानीहीत्यर्थः १० ११ १२ भातिजानातिप्रधानपुरुषौमुख्यपुरुषौनरनारायणावित्यर्थःमुख्यत्वमेवाह जगद्धेतूइत्यादिना १३

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

लीलयाचरंताविवगच्छंताविववस्तुतोविभुत्वाद्गतिहीनावेव १४ स्थितिलयौसर्गंचलीलयाकर्तुमुद्यतौरक्षसांलयस्तूदितरजगतः
सर्गस्थिती १५ प्रेरकौअंतर्यामिनयेत्यर्थः तदेवाह सर्वहृदयस्थाविति इहलोकेचरंतौइत्यन्वयः १६ शब्दशास्त्रंव्याकरणम् १७
कृत्स्नंबहुधेत्यर्थः ज्ञानविग्रहइत्यनेनचिदानंदएवमाययाएवंशरीररूपेणभातीतिसूचितं १८ १९ २० यःसुग्रीवोनामतेननाम्नाप्र

माययामानुषाकारौचरंताविवलीलया भूभारहरणार्थायभक्तानांपालनायच १४ अवतीर्णाविहप
रौचरंतौक्षत्रियाकृती जगत्स्थितिलयौसर्गंलीलयाकर्तुमुद्यतौ १५ स्वतंत्रौप्रेरकौसर्वहृदयस्थाविहे-
श्वरौ नरनारायणौलोकेचरंतावितिमेमतिः १६ श्रीरामोलक्ष्मणंप्राहपश्यैनंबटुरूपिणम् शब्दशा-
स्त्रमशेषेणश्रुतंनूनमनेकधा १७ अनेनभाषितंकृत्स्नंनकिंचिदपशब्दितम् ततःप्राहहनूमंतंरा-
घवोज्ञानविग्रहः १८ अहंदाशरथीरामस्त्वयंमेलक्ष्मणोनुजः सीतयाभार्ययासार्द्धंपितुर्वचनगौर
रवात् १९ आगतस्तत्रविपिनेस्थितोहंदंडकेद्विज तत्रभार्याहृतासीतारक्षसाकेनचिन्मम २० त्वाम
न्वेष्टुमिहायातौत्वंकोवाकस्यवावद बटुरुवाच सुग्रीवोनामराजायोवानराणांमहामतिः २१ चतुः
र्भिर्मंत्रिभिःसार्द्धंगिरिमूर्धनितिष्ठति २१ भ्राताकनीयान्सुग्रीवोवालिनःपापचेतसः तेननिष्का
शितोभार्याहृतातस्येहवालिना २२ तद्भयादृष्यमूकाख्यंगिरिमाश्रित्यसंस्थितः अहंसुग्रीवसचिवो
वायुपुत्रोमहामते २३ हनूमान्नामविख्यातोह्यंजनीगर्भसंभवः तेनसख्यंत्वयायुक्तंसुग्रीवेणरघू
त्तम २४ भार्यापहारिणंहंतुंसहायस्तेभविष्यति इदानीमेवगच्छामआगच्छयदिरोचते २५ श्रीराम
उवाच अहमप्यागतस्तेनसख्यंकर्तुंकपीश्वर सख्युस्तस्यापियत्कार्यंतत्करिष्याम्यसंशयम् २६
हनूमान्स्वस्वरूपेणास्थितोराममथाब्रवीत् आरोहतांममस्कंधौगच्छामःपर्वतोपरि २७

सिद्धोवानराणांरा-
जासगिरिमूर्धनितिष्ठतीत्यन्वयः २१ तत्रावस्थानेहेतुमाह भ्रातेति निष्काशितःहीनराज्यःकृतःभार्याचहृता २२ २३ तेनसख्यंतुयुक्
तंसमदुःखत्वात् नतुवालिनेतिभावः २४ २५ तस्यापियत्कार्यंवालिवधरूपं २६ पर्वतोपरिगमनेश्रमातिशयात्स्वस्कंधारोहणप्रेर
णा २७

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मंत्रिभिः सहेतिशेषः तथेतिउक्तेतिशेषः२८उत्पपातउत्प्लुत्यजगामेत्यर्थः स्थितौतस्थापितावित्यर्थः २९ येतुभयंवालिभीरितावितिशेषः
काकृतम् ३० योजितंताभ्यामंगीकारंकारितंआरोप्यकृत्वा ३१ विष्टरायआसनार्थे ३२ ३३ ३४ ३५ शत्रुघातिनस्तेशत्रुवधे
सहाय्यमपिकरिष्येइत्यन्वयः ३६ विहायसानीयमानांप्रमदोत्तमामपश्यमितिशेषः ३७ साचरामरामेतिक्रोशंती अस्मान् पर्वतोप

यत्रतिष्ठतिसुग्रीवोमंत्रिभिर्वालिनोभयात् तथेतितस्यारुरोहस्कंधंरामोथलक्ष्मणः २८ उत्पपातगिरेर्मू
र्ध्निक्षिप्रणादेवमहाकपिः वृक्षच्छायांसमाश्रित्यस्थितौतौरामलक्ष्मणौ २९ हनूमानपिसुग्रीवमुपगम्यकृतांज
लिः येतुतेभयमायातौराजन्श्रीरामलक्ष्मणौ ३० शीघ्रमुत्तिष्ठरामेणसख्यंतेयोजितंमया अग्निंसाक्षिण
मारोप्यतेनसख्यंद्रुतंकुरु ३१ ततोतिहर्षात्सुग्रीवः समागम्यरघूत्तमम् वृक्षशाखांस्वयंछित्वाविष्टराय
ददौमुदा ३२ हनूमान्लक्ष्मणायादात्सुग्रीवायचलक्ष्मणः हर्षेणमहताविष्टाः सर्वएवावतस्थिरे ३३ लक्ष्मणस्त्व
ब्रवीत्सर्वंरामवृत्तांतमादितः वनवासाभिगमनंसीताहरणमेवच ३४ लक्ष्मणोक्तंवचः श्रुत्वासुग्रीवोराममब्रवी
त् अहंकरिष्येराजेंद्रसीतायाः परिमार्गणम् ३५ सहाय्यमपितेराम करिष्येशत्रुघातिनः शृणुरामममयादृष्टं
किंचित्तेकथयाम्यहम् ३६ एकदामंत्रिभिः सार्द्धंस्थितोहंगिरिमूर्द्धनि विहायसानीयमानांकेनचित्प्रम
दोत्तमां ३७ क्रोशंतींरामरामेतिदृष्ट्वास्मान्पर्वतोपरि आमुच्याभरणान्याशुस्वोत्तरीयेणभामिनी ३८ निरीक्ष्या
धः परित्यज्यक्रोशंतीतेनरक्षसा नीताहंभूषणान्याशुगुहायामक्षिपंप्रभो ३९ इदानीमपिपश्यत्वंजानी
हितववानवा इत्युक्त्वानीयरामायदर्शयामासवानरः ४० विमुच्यरामस्तद्दृष्ट्वाहासीतेतिमुहुर्मुहुः हृ
दिनिक्षिप्यतत्सर्वंरुरोदप्राकृतोयथा ४१ आश्वास्यराघवंभ्राता लक्ष्मणोवाक्यमब्रवीत् अचिरेणैवते
रामप्राप्स्यतेजानकीशुभा वानरेंद्रसहायेनहत्वारावणमाहवे ४२ रिदृष्ट्वास्वोत्तरीयेणतदेकदेशेनाभरणानिआमुच्यब·

ध्वापुनरस्मान्निरीक्ष्यतान्यधः परित्यज्यक्रोशंतीतेननीताक्रोशनक्रियायासमानकर्तृकः त्काअहंचतानिगुहायामक्षिपं ३८ ३९ इदानींत्वम
पिपश्यतवभार्यायाभवंतिवानभवंतिचेतिजानीहिनिश्चयंकुरु ४० ततभूषणयुक्तंवासः खंडंविमुच्यदृष्ट्वाभूषणानीतिशेषः तत्सर्वंभूषण
जातं ४१ तेत्वया ४२ 

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

४२ तयोःसमीपतोग्निंप्रज्वाल्यसख्यंकुरुतामित्यध्याहार्येतिशेषः ४४ आलिंग्यपरस्परंसख्येइत्यवदतामितिशेषः सखित्वकरणफ-
लंदर्शयतिसमीपेइति ४५ वालिनायदुदंतंमद्विषयेकृतंतच्छृणु ४६ नाम्नामायावीत्यन्वयः समुपाह्वयत फल्गुयायेतिशेषः ४७

सुग्रीवोप्याहहेरामप्रतिज्ञांकरवाणिते समरेरावणंहत्वातवदास्यामिजानकीं ४३ ततोहनूमान्प्रज्वा-
ल्यतयोरग्निंसमीपतः तावुभौरामसुग्रीवावग्नौसाक्षिणितिष्ठति बाहूप्रसार्यचालिंग्यपरस्परमकल्म
षौ समीपेरघुनाथस्यसुग्रीवःसमुपाविशत ४५ स्वोदंतंकथयामासप्रणयाद्रघुनायके सख्येप्रणयकम
मोदंतंवालिनायत्कृतंपुरा ४६ मयपुत्रोथमायावीनाम्नापरमदुर्मदः किष्किंधांसमुपागत्यवालिनंसमु
पाह्वयत ४७ सिंहनादेनमहतावालीतुतदमर्षणः निर्ययौक्रोधताम्राक्षोजघानदृढमुष्टिना ४८ दु
द्रावतेनसंविग्नोजगामस्वगुहांप्रति अनुदुद्रावतंवालीमायाविनमहंतथा ततःप्रविष्टमालोक्यगु
हांमायाविनंरुषा ४९ वालीमामाहतिष्ठत्वंबहिर्गच्छाम्यहंगुहाम् इत्युक्त्वाविश्यसगुहांमासमेकंननि
र्ययौ ५० मासादूर्ध्वंगुहाद्वारान्निर्गतंरुधिरंबहु तद्दृष्ट्वापरिनप्तांगोमृतोवालीतिदुःखितः ५१ गुहा
द्वारिशिलामेकांनिधायगृहमागतः ततोब्रुवंमृतोवालीगुहायांरक्षसाहतः ५२ तच्छ्रुत्वादुःखिताःस
र्वेमामनिच्छंतमप्युत राज्येभिषेचनंचक्रुःसर्वेवानरमंत्रिणः ५३ शिष्टंतदामयाराज्यंकिंचित्काल
मरिंदम ततःसमागतोवालीमामाहपरुषंरुषा ५४ बहुधाभर्त्सयित्वामांनिजघानचमुष्टिभिः
ततोनिर्गत्यनगराद्धावंपरयाभिया ५५ श्रीसीतारामचंद्राभ्यांनमोनमः ७ ७ ७

तदाह्वानममर्षणोसहमानः ४८ तेनमुष्टिघातेनसंविग्नःपीडितः तंमायाविनंमायावंतंस्वगुहांप्रविष्टमालोक्येत्यन्वयः ४९।५०
मृतोवालीतिनिश्चयेनेतिशेषः ५१ रक्षसाहतोवालीमृतइतिस्वज्ञातीनब्रुवम् ५२ अनिच्छंतंराज्याभिषेकमितिशेषः ५३ शिष्टं
पालितंपरुषंभात्रद्रोहेत्यादिवाक्यम् ५४ परयाभियावालिजया ५५ ७ ७ ७ ७ ७

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ऋष्यमूकंतदाख्यमिमंपर्वतम् ऋषेःशापभयात् तच्चान्तुपदमेवस्फुटंभविष्यति ५६ हृताश्रयः हृतग्रहः ५७ सुखितोस्मिअद्यत्वाहशामित्र-
लाभेनेतिशेषः ५८ ५९ बलवतांबलीसर्वेभ्योबलवद्भ्योप्यधिकबलवानित्यर्थः दुरासदंवालिनमितिशेषः ६० तद्बलंवालिनोबलम् ६१
६२ असहमानइतिच्छेदः ६३ अस्यशिरोहस्ताभ्यांभ्रामयन् ग्रीवातश्चालयन् छित्वाग्रीवारूपादाधारादुत्पाट्यहस्ताभ्यांतोलयित्वाएतावद्भा-

लोकान्सर्वान्परिक्रम्यऋष्यमूकंसमाश्रितः ऋषेःशापभयात्सोपिनायातीमंगिरिंप्रभो ५६ तदादिममभार्यांसस्वयंभुंक्तेविमूढधीः अतोदुःखेनसंतप्तोहृतदारोहृताश्रयः ५७ त्वसाम्प्रतंभवत्प्रसादसंपर्शात्सुखितोस्म्यहं मित्रदुःखेनसंतप्तोरामोराजीवलोचनः ५८ हनिष्यामितवद्वेष्यंशीघ्रंभार्यापहारिणम् इतिप्रतिज्ञामकरोत्सुग्रीवस्यपुरस्तदा ५९ सुग्रीवोप्याहराजेंद्रवालीबलवतांबली कथंहनिष्यति भवान्देवैरपिदुरासदं ६० शृणुतेकथयिष्यामितद्बलंबालिनोवर कदाचिद्दुंदुभिर्नाममहाकायोमहाबलः ६१ किष्किंधामगमद्रामममहामहिषरूपधृक् युद्धायवालिनंरात्रौसमाह्वयतभीषणः ६२ तच्छ्रुत्वासहमानोसौवालीपरमकोपनः महिषंशृंगयोर्धृत्वापातयामासभूतले ६३ पादेनैकेनतत्कायमाक्रम्यास्यशिरोमहत् हस्ताभ्यांभ्रामयंश्छित्वातोलयित्वाक्षिपद्भुवि ६४ पपातनच्छिरोराममातंगाश्रमसन्निधौ योजनात्पतितंतस्मान्मुनेराश्रममंडले ६५ रक्तवृष्टिःपपातोच्चैर्दृष्ट्वातांक्रोधमूर्च्छितः मातंगोवालिनंप्राहयद्यागंतासिमेगिरिम् ६६ इतःपरंभग्नशिरामरिष्यसिनसंशयः एवंशप्तस्तदारभ्यऋष्यमूकंनयात्यसौ ६७ एतज्ज्ञात्वाहमप्यत्रवसामिभयवर्जितः रामपश्यशिरस्तस्यदुंदुभेःपर्वतोपमं ६८ तत्क्षेपणेयदाशक्तःशक्तस्त्वंवालिनोवधे इत्युक्त्वादर्शयामाससशिरस्तद्गिरिसंनिभम् ६९

रकमितिज्ञात्वाप्रक्षिप्तवान् ६४ क्षेपवेगेनप्रकृष्टऊर्ध्वंयोजनमात्रंगत्वाततोमातंगाश्रमेपपातपातनाच्च
योजनात्तन्मितादूर्ध्वदेशात्पतितम् ६५ अतस्तदाश्रमेशिरसोगलितारक्तवृष्टिःपपात ततःक्रुद्धःसवालिनंप्राह ६६ ६७ एतत्तज्ज्ञात्वा
तदगमनंज्ञात्वा ६८ यद्यद्यदितस्यबाणेनदूरंक्षेपणेत्वंशक्तस्तर्हित्वंवालिवधेशक्तः ६९



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

७० ७१ चालयित्वामूलतोबाहुभ्यांकंपनेनअंजसाअनायासेन ७२ छिद्रंकरोषिसप्तस्वपीतिशेषः ७३ ७४ ७५ एवमाश्चर्यकर्मणारामंपरमात्मानंज्ञात्वास्तौतिदेवेति संगतिंमैत्रींप्राप्तः ७८ मोक्ष सचिवंमोक्षप्रदत्वात्तत्सचिवंभवंसंसारं ७७ अन्यद्दारपुत्रादिकंत्वन्मायाकृतत्वेनमायिकत्वान्नाकांक्षे ऽतोमांनिवर्तयेत्यर्थः ७८ मृदर्थंभूमिंखनतायथानिधानंधनराशिः प्राप्तोभवति-

हृस्वारामःस्मितंकृत्वापादांगुष्ठेनचाक्षिपत् दशयोजनपर्यंतंतदद्भुतमिवाभवत् ७० साधुसाध्विति तंप्राहसुग्रीवोमंत्रिभिःसह पुनरप्याहसुग्रीवोरामंभक्तपरायणं ७१ एतेतालामहासाराःसप्तपश्य रघूत्तम एकैकंचालयित्वासौनिःपत्राकुरुतेंजसा ७२ यदित्वमेकबाणेनविध्वाच्छिद्रंकरोषिचेत् ह तस्त्वयातदावालीविश्वासोमेप्रजायते ७३ तथेतिधनुरादायसायकंतत्रसंदधे ७३ बिभेदचततदा रामःसप्ततालान्महाबलः तालान्सप्तविनिर्भिद्यगिरिंभूमिंचसायकः ७४ पुनरागत्यरामस्यतूणी रेपूर्ववत्स्थितः ततोतिहर्षात्सुग्रीवोराममाहातिविस्मितः ७५ देवत्वंजगतांनाथःपरमात्मानसं- शयः मत्पूर्वकृतपुण्यौघैःसंगतोद्यमयासह ७६ त्वांभजंतिमहात्मानःसंसारविनिवृत्तये त्वांप्रा- प्यमोक्षसचिवंप्रार्थयेहंकथंभवम् ७७ दाराःपुत्राधनंराज्यंसर्वंत्वन्माययाकृतम् अतोहंदेवदेवेश नाकांक्षेन्यत्प्रसीदमे ७८ आनंदानुभवंत्वाद्य प्राप्तोहंभाग्यगौरवात् मदर्थंयतमानेननिधानमि वसत्पते ७९ अनाद्यविद्यासंसिद्धंबंधनंछिन्नमद्यनः यज्ञदानतपःकर्मपूर्तेष्टादिभिरप्यसौ ८० नजीर्यतेपुनर्दार्ढ्यंभजतेसंसृतिःप्रभो त्वत्पादद्दर्शनात्सद्योनाशमेतिनसंशयः ८१ क्षणार्द्धमपि यच्चित्तंत्वयितिष्ठत्यचंचलम् तस्याज्ञानमनर्थानांमूलंनश्यतितत्क्षणात् ८२

एवमाह आनंदानुभवंत्वद्रूपंत्वांप्राप्तः ७९ अनाद्यविद्यासंसिद्धंनिष्पन्नंविषयवासनारूपंबंधनंसंसारप्रवर्तकंनश्छिन्नंन ष्टं अन्येभ्योभगवद्दर्शनस्याधिक्यमाह यज्ञेत्यादियज्ञादिभिरप्यसौसंसृतिस्तत्कारणंविषयवासनारूपंबंधनंनजीर्यति अपि तुदार्ढ्यमेवभजतेत्वच्चरणदर्शनात्तुसद्यस्तन्नाशमेति ८० ८१ यच्चित्तंयस्यचित्तंयस्यानर्थानांनानासंसृतिरूपाणांमूलमज्ञानं नश्यतीत्यन्वयः ८२

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मेमनःसदात्वयितिष्ठतु ८३ यस्यवाणीत्वन्नामगायतिसमुच्यते ८४ बंधस्यसंसारकारणस्यमोचनीम् ८५ त्वन्मायययाकृतःसंसारोयस्यसःत्वदंशःत्वत्प्रतिबिंबरूपत्वात् अतःस्वपादयोर्भक्तिमादिश्यदत्वात्राहि ८६ त्वन्मायावृतचेतसइतःपूर्वंमित्रादयआसन् अद्यतुत्वत्पाददर्शनान्मेसर्वंब्रह्मैवेतिभातीत्यन्वयः ८७ गुणविशेषतासत्वादिगुणविशेषवत्वेत्यर्थः ८८ सागुणविशेषतानाना

तत्तिष्ठतुमनोरामत्वयिनान्यत्रमेसदा ८३ रामरामेतियद्वाणीमधुरंगायतिक्षणम् सब्रह्महासुरापोवामुच्यतेसर्वपातकैः ८४ नकांक्षेविजयंरामनचदारसुखादिकम् भक्तिमेवसदाकांक्षेत्वयिबंधविमोचनीम् ८५ त्वन्मायाकृतसंसारस्त्वदंशोहंरघूत्तम स्वपादभक्तिमादिश्यत्राहिमांभवसंकटात् ८६ पूर्वंमित्रार्युदासीनास्त्वन्मायावृतचेतसः आसन्मेद्यभवत्पाददर्शनादेवराघव ८७ सर्वंब्रह्मैवमेभातिक्वमित्रंक्वचमेरिपुः यावत्त्वन्माययाबद्धस्तावद्गुणविशेषता ८८ सायावदस्तिनानात्वंतावद्भवतिनान्यथा यावन्नानात्वमज्ञानात्तावत्कालकृतंभयम् ८९ अतोविद्यामुपास्तेयःसोंधेतमसिमज्जति मायामूलमिदंसर्वंपुत्रदारादिबंधनं अतोत्सारयमायांत्वंदासींतवरघूत्तम ९० त्वत्पादपद्मार्पितचित्तवृत्तिस्त्वन्नामसंगीतकथासुवाणी त्वद्भक्तसेवानिरतौकरौमेत्वदंगसंगंलभतांमदंगं ९१ त्वन्मूर्तिभक्तान्स्वगुरुंचचक्षुःपश्यत्वजस्रंसशृणोतुकर्णः त्वज्जन्मकर्माणिचपादयुग्मंव्रजत्वजस्रंतवमंदिराणि ९२ अंगानितेपादरजोविमिश्रतीर्थानिबिभ्रत्वहिशत्रुकेतो शिरस्त्वदीयंभवपद्मजाद्यैर्जुष्टंपदंराममनमत्वजस्रं ९३ इतिश्रीम॰ उमाम॰ किष्किंधाकांडेप्रथमःसर्गः १

त्वंसुहृन्मित्रार्युदासीनत्वरूपोभेदःकालकृतंमृत्युकृतं ८९ अतःअविद्यामितिच्छेदः अतउत्सारयेतिच्छेदः ९० त्वत्पादपद्मयोरर्पितात्तचित्तवृत्तिर्येनसः इद्दशोहंभूयासमितिशेषः त्वन्नामविषयसंगीतकथासुवाणीनिरतातिष्ठत्वित्यन्वयः त्वद्भक्तानांसेवायांनिरतौतत्परौ ९१ त्वन्मूर्तिभक्तान्त्वन्मूर्तयश्चतद्भक्ताश्चतान् सकर्णः त्वज्जन्मानिमायिकानितत्त्वकर्माणिचशृणोत्वित्यन्वयः ९२ अहिशत्रुकेतोगरुडध्वजमेशिरस्त्वदीयंशिवब्रह्माद्यैःसेवितंपदंनमतु ९३ इति॰ कि॰ प्र॰ स॰ १



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

स्वात्मपरिष्वंगःस्वशरीरालिंगनंतेनदूरीकृताशेषपापंसस्मितमितिमायायाभगवद्दासरूपत्वेनस्मितद्वारामाययातदावरणं १ कार्यं
रावणवधःयन्मांप्रतित्वदुक्तंत्वयोक्तंतत्सत्यमेव २ रघुनंदनःअग्निसाक्षिकंसख्यंकृत्वाकपींद्रायतदुपकारकंकिंकृतवानित्येवं
लोकामांवदिष्यंतिअतस्त्वदुपकारोमेवश्यंकर्तव्यइतिशेषः ३ उक्तमेवदार्ढ्यायपुनराहइतीतिभद्रंतेइत्यनेनमदाज्ञाकरणेएवते

श्रीमहादेवउवाच   इत्थंस्वात्मपरिष्वंगनिर्धूताशेषकल्मषम् रामःसुग्रीवमालोक्यसस्मितंवा
क्यमब्रवीत् १ मायांमोहकरींतस्मिन्वितन्वन्कार्यसिद्धये सखेत्वदुक्तंयत्तन्मांसत्यमेवनसंशयः २
किंतुलोकावदिष्यंतिमामेवंरघुनंदनः कृतवान्किंकपींद्रायसख्यंकृत्वाग्निसाक्षिकम् ३ इतिलोकापवा
दोमेभविष्यतिनसंशयः तस्मादाह्वयभद्रंतेगत्वायुद्धायवालिनम् ४ बाणेनैकेनतंहत्वाराज्येत्वाम
भिषिंचये तथेतिगत्वासुग्रीवःकिष्किंधोपवनंद्रुतम् ५ कृत्वाशब्दंमहानादंतमाह्वयतवालिनम्
तच्छ्रुत्वाभ्रातृनिनदंरोषताम्रविलोचनः ६ निर्जगामगृहाच्छीघ्रंसुग्रीवोयत्रवानरः तमापतंतं
सु ग्रीवःशीघ्रंवक्षस्यताडयत् ७ सुग्रीवमपिमुष्टिभ्यांजघानक्रोधमूर्छितः वालीतमपिसुग्री
वमेवंक्रुद्धौपरस्परम् ८ अयुद्ध्येतामेकरूपौदृष्ट्वारामोतिविस्मितः नमुमोचतदाबाणंसुग्रीववधशं
कया ९ ततोदुद्रावसुग्रीवोवमद्रक्तंभयाकुलः वालीस्वभवनंयातःसुग्रीवोराममब्रवीत् १० किं
मांघातयसेरामशत्रुणाभ्रातृरूपिणा यदिमद्धननेवांछात्वमेवजहिमांविभो ११ एवंमेप्रत्ययंकृ
त्वासत्यवादिन्रघूत्तम उपेक्षसेकिमर्थंमांशरणागतवत्सल १२ श्रुत्वासुग्रीववचनंरामःसाश्रुविलो
चनः आलिंग्यमास्मभैषीस्त्वंदृष्ट्वावामेकरूपिणौ १३ श्रीसीतारामचंद्राभ्यांनमोनमः॥ छ

भद्रंनात्यथेतिसूचितम् ४ तथेतीत्यर्थंप्रतिज्ञायेतिशेषः ५ महानादम् महाप्रतिध्वनिजनकंआह्वयत्स्पर्द्धयाशब्दि
तवान् ६ ७ ८ एकरूपौसमानाकारौ अतएवरामोबाणंनमुमोच ९ १० जहिशस्त्रेणेतिशेषः ११ प्रत्ययंकृत्वाविश्वास
मुत्पाद्यसत्यवादिन्नित्यादिराक्षेपः १२ युवांसमानाकारौदृष्ट्वामित्रघातशंकयाहंसायकंनमुक्तवानित्यन्वयः १३ श्रीराम

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

भ्रमशांतयेभ्रमशांतिफलकं १४ अहंरामइत्यनेनस्वस्यामिथ्याभाषित्वंसूचितंत्वांशपेयदिनहनिष्यामितर्हिमित्रस्यतवैवशप थइत्यर्थः १५ पुष्पितांमालांआमुच्यसंबध्यप्रेष्यतामित्यन्वयः १६ १७ १८ परिकरंकच्छबंधादिरूपं १९ २० तेनत्वत्तोभग्नः

मित्रघातित्वमाशंक्यमत्कृतवान्सायकंनहि इदानीमेवतेचिन्हंकरिष्येभ्रमशांतये १४ गत्वाह्वयपुनः शत्रुंहतंद्रक्ष्यसिवालिनम् रामोहंत्वांशपेभ्रातर्हनिष्यामिरिपुंक्षणात् १५ इत्याश्वास्यससुग्रीवंरामोलक्ष्मणमब्रवीत् सुग्रीवस्यगलेपुष्पमालामामुच्यपुष्पिताम् १६ प्रेषयस्वमहाभागसुग्रीवं वालिनंप्रति लक्ष्मणस्तुतदाबध्वागच्छगच्छेतिसादरम् १७ प्रेषयामाससुग्रीवंसोपिगत्वातथाकरोत् पुनरप्यद्भुतंशब्दंकृत्वावालिनमाह्वयत् १८ तच्छ्रुत्वाविस्मितोवालीक्रोधेनमहतावृतः बध्वा परिकरंसम्यक्गमनायोपचक्रमे १९ गच्छंतंवालिनंतारागृहीत्वानिषिषेधतं नगंतव्यंत्वयेदानीं शंकामेतीवजायते २० इदानीमेवतेभग्नःपुनरायातिसत्वरः सहायोबलवांस्तस्यकश्चिन्नूनंसमागतः २१ वालीतामाहहेसुभ्रु शंकातेव्येतुतद्भुता प्रियेकरंपरित्यज्यगच्छगच्छामितंरिपुम् २२ हत्वाशीघ्रंसमायास्येसहायस्तस्यकोभवेत् सहायोयदिसुग्रीवस्ततोहत्वोभयंक्षणात् २३ आयास्येमाशुचःशूरःकथंतिष्ठेद्गृहेरिपुम् ज्ञात्वाप्याहूयमानंहिहत्वायास्यामिसुंदरि २४ तारोवाच मत्तोन्यच्छृणुराजेंद्रश्रुत्वाकुरुयथोचितम् आह मामंगदःपुत्रोमृगयायांश्रुतंवचः २५ अयोध्यापतिःश्रीमान्रामोदाशरथिःकिल लक्ष्मणेनसहभ्रात्रासीतयाभार्ययासह २६

पुनरायातिगर्जन्युद्धार्थमाह्वयति २१ तद्गतासुग्रीवसहायविषयाकरंपरित्यज्यगच्छ अंतःपुरमितिशेषः २२ मत्तोरक्षितंजीवितार्थिकस्तस्यसहायोभावेदित्यन्वयः २३ आह्वयमानंरिपुंज्ञात्वापिशूरःकथंगृहेतिष्ठेत् अतस्तंहत्वात्रायास्यामिइतिछेदः २४ यन्मामंगदोमृगयायांश्रुतंवचआह तच्छ्रुत्वायथोचितं कुरु २५ २६



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

रावणेनसीताहृतातांसहभ्रात्रामार्गमाणोऋष्यमूकाद्रिमागतः २७ समागतःसंमीलितःसख्यंचतेनचकार २८ २९ इतिनिश्चि
त्यपरस्परसहाय्यंप्रतिज्ञाययातोस्ववासस्थानमितिशेषः तस्मान्निश्चितंनिश्चितार्थकंमेवचः शृणुइदानीमेवेत्यादरेन्यथेति
आदिः ३० ३१कुलंवानरकुलं ३२ ३३ ३४ स्नेहोभविष्यति सुग्रीवतोपिममरामकार्येसमर्थत्वादितिभावः ३५स्व·

आगतोदंडकारण्यंतत्रसीताहृताकिल रावणेनसहभ्रात्रामार्गमाणोथजानकीं २७ आगतो·
ऋष्यमूकाद्रिंसुग्रीवेणसमागतः चकारतेनसुग्रीवःसख्यंचानलसाक्षिकं २८ प्रतिज्ञांकृतवान्
रामःसुग्रीवायसलक्ष्मणः वालिनंसमरेहत्वाराजानंत्वांकरोम्यहम् २९ इतिनिश्चित्यतौयातौ-
निश्चितंशृणुमद्वचः इदानीमेवतेभग्नःकथंपुनरुपागतः ३० अतस्त्वंसर्वथावैरंत्यक्त्वासुग्रीवमा
नय यौवराज्येभिषिंचाशुरामंत्वंशरणंव्रज ३१ पाहिमामंगदंराज्यंकुलंचहरिपुंगव इत्युक्त्वा
अश्रुमुखीतारापादयोःप्रणिपत्यतं ३२ हस्ताभ्यांचरणौधृत्वारुरोदभयविह्वला तामालिंग्यतदा
वालीसस्नेहमिदमब्रवीत् ३३ स्त्रीस्वभावाद्बिभेषित्वंप्रियेनास्तिभयंमम रामोयदिसमायातो·
लक्ष्मणेनसमंप्रभुः ३४ तदारामेणमेस्नेहोभविष्यतिनसंशयः रामोनारायणःसाक्षादवतीर्णो
खिलप्रभुः ३५ भूभारहरणार्थायश्रुतंपूर्वंमयानघे स्वपक्षःपरपक्षोवानास्तितस्यपरात्मनः ३६
अनेष्यामिगृहंसाधिनत्वातच्चरणांबुजम् भजतोनुभजत्येषभक्तिगम्यःसुरेश्वरः ३७ यदिस्वयं
समायातिसुग्रीवोहन्मितंक्षणात् यदुक्तंयौवराज्यायसुग्रीवस्याभिषेचनं ३८ कथमाहूयमानोहं
युद्धायरिपुणाप्रिये शूरोहंसर्वलोकानांसंमतःशुभलक्षणे ३९ भीतभीतमिदंवाक्यंकथंवाली
वदेत्प्रिये तस्माच्छोकंपरित्यज्यतिष्ठसुंदरिवेश्मनि ४०

पक्षपरपक्षाभावेहेतुगर्भविशेषणंपरात्मनइति तेनसर्वत्रसमःसइतिध्वनितं ३६ भजतः भक्तानित्यर्थः ३७ यदिस्वयमिति असः
हायइत्यर्थः ३८ कथंतदभिषेचनंकुर्यामितिशेषः यतोहंसर्वलोकानांसंमतः ३९ वालीभीतभीतंअत्यंतभयसूचकमिदंवाक्यंकथंवदेत्
४०

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

४१ उत्पपातसुद्धायतत्संमुखमितिशेषः ४२ अहन् हतवान् ४३ रामं विलोकयन् शीघ्रमेतं जहीति दृष्ट्यासूचयन् ४४ ऐंद्रं धनुषि अगस्त्यदत्ते ऐंद्रमितिपाठे ऐंद्रास्त्राभिमंत्रितमित्यर्थः वृक्षखंडगः वृक्षसमूहगः ४५ तत्तूहृदयं लक्ष्यं कृत्वेतिशेषः ४६ महीं कंपयन् सशरोरामधनुः सकाशात् महाशब्दं मुंचन् उत्पपात आकाशे इतिशेषः ततः सनिपपात वालिवक्षसि ततस्तद्विभेद ४७

एवमाश्वास्य तारां तां शोचंतीमश्रुलोचनाम् गतोवालीसमुद्युक्तः सुग्रीवस्य वधाय सः ४१ दृष्ट्वावालिनमायांतं सुग्रीवोभीमविक्रमः उत्पपात गलेबद्धपुष्पमालः पतंगवत् ४२ मुष्टिभ्यां ताडयामास वालिनं सोपितं तथा अहन्वालीच सुग्रीवं सुग्रीवो वालिनं तथा ४३ रामं विलोकयन्नेव सुग्रीवो यद्धधीधि इत्येवं युध्यमानौ तौ दृष्ट्वा रामः प्रतापवान् ४४ बाणमादाय तूणीरादैंद्रे धनुषि संदधे आकृष्य कर्णपर्यंतमदृश्यो वृक्षखंडगः ४५ निरीक्ष्य वालिनं सम्यग्लक्ष्यं तद्धृदयं हरिः उत्ससर्जाशनिसमं महावेगं महाबलः ४६ बिभेद सशरो वक्षो वालिनः कंपयन्महीम् उत्पपात महाशब्दं मुंचन्स निपपात ह ४७ तदा मुहूर्तं निःसंज्ञो भूत्वा चेतनमाप सः ततो वाली ददर्शाग्रे रामं राजीवलोचनं धनुरालंब्य वामेन हस्तेनान्येन सायकम् ४८ बिभ्राणं चीरवसनं जटामुकुटधारिणम् विशालवक्षसं भ्राजद्वनमालाविभूषितं ४९ पीनचार्वायतभुजं नवदूर्वायतच्छविम् सुग्रीवलक्ष्मणाभ्यां च पार्श्वयोः परिसेवितम् ५० विलोक्य शनकैः प्राह वाली रामं विगर्हयन् किं मयापकृतं राम तव येन हतोस्म्यहम् ५१ राजधर्ममविज्ञाय गर्हितं कर्म ते कृतम् वृक्षखंडे तिरोभूत्वा त्यजता मयि सायकम् ५२ श्रीसीतारामा॰

तदा वक्षोभेदकाले चेतनं चैतन्यम् वामेन धनुरन्येन सायकमन्यमालंब्य स्थितमितिशेषः ४८ वक्षसि वनमाला कंठमारभ्याजानुमाला वनमाला तया विभूषितम् ४९ ५० विगर्हयन् कुत्सयन् ५१ राजधर्ममिति तिरोभूयान्येन युद्धं कुर्वति बाणपातः छलत्वान्न राजधर्म इतिभावः त्यजता भावे आर्षः ५२ श्रीसीतारामचंद्राभ्यां नमो नमः॥ ७ ७ ७

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

चोरवत्कृतसंगरस्त्वंमांहत्वायशोलप्स्यसेकिं अपित्वयशएवेतिभावः यदितेक्षत्रियदायादत्वाद्यभिमानस्तदामेमया·
समक्षंयुद्धंकृत्वातत्फलंयशोमरणंवाप्राप्स्यसेप्राप्तोभवेः अन्यार्थेन्यशब्दप्रयोगेणासन्नमरणतासूच्यते ५३ कृतंउप·
कृतमित्यर्थः ५४ ५५ ५६ ५७ कंधर्मंकांधर्मकृतांकीर्तिं ऐहिकमपिनमद्वधेत्याह अभक्ष्यमिति ५८ इत्येवंबहु·

यशःकिंलप्स्यसेरामचोरवत्कृतसंगरः यदिक्षत्रियदायादोमनोर्वंशसमुद्भवः ५३ युद्धंकृत्वास·
मक्षंमेप्राप्स्यसेतत्फलंतदा सुग्रीवेणकृतंकिंतेमयावानकृतंकिमु ५४ रावणेनहृताभार्यातव
राममहावने सुग्रीवंशरणंयातस्तदर्थमितिशुश्रुम ५५ बलरामनजानीषेमद्बलंलोकविश्रुतं
रावणंसकुलंबध्वाससीतंलंकयासह ५६ आनयामिमुहूर्तार्धाद्यदिचेच्छामिराघव धर्मिष्ठइति
लोकेस्मिन्कथ्यसेरघुनंदन ५७ वानरंव्याधवद्धत्वाधर्मंकंलप्स्यसेवद अभक्ष्यंवानरंमांसंहत्वा·
मांकिंकरिष्यसि ५८ इत्येवंबहुभाषंतंवालिनंराघवोब्रवीत् धर्मस्यगोप्तालोकेस्मिंश्चरामिसशरा
सनः ५९ अधर्मकारिणंहत्वासद्धर्मंपालयाम्यहं दुहिताभगिनीभ्रातुर्भार्याचैवतथास्नुषा ६०स
मायोरमतेतासामेकामपिविमूढधीः पातकीसतुविज्ञेयःसवध्योराजभिःसदा ६१ सीतारामा·

भाषंतंअसंबद्धंप्रलपंतमित्यर्थः५९अधर्मेतिसद्धर्मरक्षणांगत्वादधर्मकारिवधस्यनदोषत्वमितिभावः अधर्मकारित्वंवालिनःस·
मर्थयतेदुहितेत्यादिभ्रातुःकनिष्ठस्येतिशेषः ६०एताःसर्वाःसमास्तत्स्यास्तासांमध्येयोविमूढधीरपिएकांरमतेसपातकीज्ञे·
यःविमूढधीरपीत्यनेनाज्ञानान्नदोषइतिपरिहृतंईदृशस्यार्थस्याज्ञानात्करणेपिमहानेवदोषःअतएवतस्यवधपर्यंतोदंडइत्याह
सवध्यइति ६१

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

ननुमनुष्याधिकारिकंशास्त्रंनतुतिर्यगादिविषयमतस्तिरश्चामस्माकंकोत्रदोषइतिचेत् शरणंतिरश्चामनधिकारोहि अज्ञानकृतः
तच्चाज्ञानंनवाल्यादिषुस्वयंप्रतिभातवेदत्वात् देवांशत्वाच्चएवंच कर्तव्याकर्तव्यज्ञानवतामकर्तव्यकरणेदोषोभवत्येवातएवेंद्रादीनामहल्याद्य
तिक्रमणादौदोषश्रुतिः संगच्छतेदेवानांयज्ञाद्यनधिकारस्तुयजनीयदेवतांतराभावात् अतएवब्रह्मविद्यायामिंद्रादीनामप्यधिकारः
श्रुतिषुश्रूयतेइत्येषोत्रभगवतोभिप्रायः ६२ किंचमन्निंदयादोषांतरमागपित्वंजायतेइत्याह त्वंकपित्वादिविसंचारैर्लोकंपुनाना
महांतोविचरंतियत् यतोतस्तान्नातिभाषयेत् ननिंदेत् त्वंतुएवंसंचरंतीतिनजानासीत्यन्वयः विचरंतिहीति पाठांतरंएवंचत्वा

त्वंतुभ्रातुःकनिष्ठस्यभार्यायांरमसेबलात् अतोमयाधर्मविदाहतोसिवनगोचर ६२ त्वंकपित्वान्नजानी
षेमहांतोविचरंतियत् लोकंपुनानाःसंचारैरतस्तान्नातिभाषयेत् ६३ तच्छ्रुत्वाभयसंत्रस्तोज्ञात्वारामंर·
मापतिम् वालीप्रणम्यरभसाद्रामंवचनमब्रवीत् ६४ रामराममहाभागजानेत्वांपरमेश्वरम् अजा·
नतामयाकिंचिदुक्तंतत्क्षंतुमर्हसि ६५ साक्षात्त्वच्छरघातेनविशेषेणतवाग्रतः त्यजाम्यसून्महायोगिदुर्ल
भंतवदर्शनम् ६६ यन्नामविवशोगृण्हन्म्रियमाणःपरंपदं यातिसाक्षात्सएवाद्यमुमूर्षोर्मेपुरःस्थितः ६७
देवजानामिपुरुषंत्वांश्रियंजानकींशुभाम् रावणस्यवधार्थायजातंत्वांब्रह्मणार्थितम् ६८ अनुजानीहि
मांरामयांतंत्वत्पदमुत्तमं ममतुल्यबलेबालेअंगदेत्वंदयांकुरु ६९ विशल्यंकुरुमेरामहृदयंपाणिनास्पृश
न् तथेतिबाणमुध्धृत्यरामःपस्पर्शपाणिना त्यक्त्वातद्वानरंदेहममरेंद्रोभवत्क्षणात् ७० श्रीरामायनं

हशपवित्रीकरणार्थएवायंममसंचारइतिध्वनितं ६३ ६४ अजानतात्वदीयंपरमेश्वरत्वमजानतेत्यर्थः ६५ तवाग्रत
इतितत्स्वरूपज्ञानपूर्वकंतवाग्रतइत्यर्थः तवदर्शनंतत्स्वरूपज्ञानंमहायोगिनामपिदुर्लभम् ६६ विवशःपुत्रादिममताक्रांतो·
पिसाक्षात्त्वांपश्यतोम्रियमाणस्यपरमपदप्राप्तिरितिकिंवक्तव्यमित्यर्थः ६७ ६८ ६९ अमरेंद्रोभवत् तदंशत्वात्तत्रैवलय ७
मापेत्यर्थः ७० श्रीसीतारामचंद्राभ्यांनमोनमः ७ ७ ७ ७ ७ ७



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

विमु़क्तः स्पृष्ट इति यावत् परमं पदमैंद्रं पदं अधिकारांते मुक्तिदत्वात्तस्यापि परमपदत्वेन व्यवहारः ७१ इति श्रीमत्सकलराजविपदु-
द्धं० सेतौ किष्किंधाकांडे द्वितीयः सर्गः २ निहतेति १ परिनोदय नगरादिरक्षार्थमिति शेषः २ चतुर्द्वारकपाटादीनित्यादिनास्मि-
क्ष्माने कद्वारकपाटपरिखादिसंग्रहः ३ ४ निधनं यास्यामि वह्निप्रवेशेनेति शेषः ५ ६ ७ येनेति येन बाणेन वाली हतस्तेन बाणे-

वाली रघूत्तमशराभिहतो विमृष्टो रामेण शीतलकरेण सुखाकरेण सद्यो विमुच्य कपिदेहमनन्यल-
भ्यं प्राप्तः पदं परमहंसगणैर्दुरापम् ७१ इति श्रीमदध्या० द्वितीयः सर्गः २ श्रीमहादेव उवाच
निहते वालिनि रणे रामेण परमात्मना दुद्रुवुर्वानराः सर्वे किष्किंधां भयविह्वलाः १ तारामूचुर्म-
हाभागे हतो वाली रणाजिरे अंगदं परिरक्षाद्य मंत्रिणः परिनोदय २ चतुर्द्वारकपाटादीन् बद्ध्वा
रक्षामहे पुरीम् वानराणां तु राजानमंगदं कुरु भामिनि ३ निहतं वालिनं श्रुत्वा तारा शोकविमूर्छि-
ता अताडयत्स्वपाणिभ्यां शिरो वक्षश्च भूरिशः ४ किमंगदेन राज्येन नगरेण धनेन वा इदानी-
मेव निधनं यास्यामि पतिना सह ५ इत्युक्त्वा त्वरिता तत्र रुदती मुक्तमूर्द्धजा यत्रैता रातिशोका-
र्ता यत्र भर्तृकलेवरं ६ पतितं वालिनं दृष्ट्वा रक्तैः पांसुभिरावृतम् रुदती नाथ नाथेति पतिता त-
स्य पादयोः ७ करुणं विलपंती सा ददर्श रघुनंदनम् राम मां जहि बाणेन येन वाली हतस्त्वया ८
गच्छामि पतिसालोक्यं पतिर्मामभिकांक्षते स्वर्गेपि न सुखं तस्य मां विना रघुनंदन ९ पत्नीवि-
योगजं दुःखमनुभूतं त्वयानघ वालिने मां प्रयच्छाशु पत्नीदानफलं भवेत् १० सुग्रीवस्त्वत्सु-
खं राज्यं दापितं वालिघातिना रामेण रुमया सार्द्धं सुखसापत्न्यवर्जितम् ११ श्रीरामचंद्राय न०

नमां जहि वालिशरीरस्पृष्टनया तत्स्पर्शस्य मत्सुखावहत्वादिति भावः ८ ९ पत्नीदानफलमिति तेन धर्मेण तवापि पत्नीलाभो
भविष्यतीति भावः १० वालिघातिना रामेण दापितं वालिने ति शेषः वालिनो दातृत्वं च मरणेन स्वत्वत्यागमात्रेणेति बोध्यम् ११ ६

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

१२ १३ देहजीवयोःपतित्वेविकल्प्यनाद्यइत्याह पंचात्मकइति पंचभूतात्मकइत्यर्थः इदंजडत्वोपपादकंत्वङ्मांसेत्यादिनात्यंत वीभत्सत्वंदर्शितं कालेनकर्मभिर्गुणैःसत्वादिभिश्चोत्पन्नइत्यनेननश्वरत्वमेवंचतत्रात्यंतंप्रीत्ययोगेकातेपतिबुद्धिरित्यर्थः अ थाप्येवंबुद्धिरेवतेतर्हिसोस्त्येवेतिव्यर्थः शोकइत्यर्थः १४ नात्यइत्याह मन्यसेइतिनिरामयः नाशादिरहितःवदाह नजाय तेइत्यादि १५ सर्वगतश्चेतनोजीवएकएव अद्वितीय इतिद्वितीयसंबंधरहितस्तदेवाहाकाशवदलेपकइतिअलिप्तइत्यर्थःमा यागुणैरितिशेषः सकथमिति अविनाशित्वादितिभावः १६ देहःकाष्ठवदचित् अचेतनइत्यर्थः जीवश्चिदात्मकोज्ञानस्वरूपः

इत्येवंविलपंतींतांतारांरामोमहामनाः सांत्वयामासदययातत्वज्ञानोपदेशतः १२ किंभीरुशोचसिव्यर्थं शोकस्याविषयंपतिम् पतिस्तवायंदेहोवाजीवोवावदतत्वतः १३ पंचात्मकोजडोदेहस्त्वङ्मांसरुधिरास्थिमान् कालकर्मगुणोत्पन्नःसोप्यास्तेद्यापितेपुरः १४ मन्यसेजीवमात्मानंजीवस्तर्हिनिरामयः नजायतेनम्रियतेनतिष्ठतिनगच्छति १५ नस्त्रीपुमान्वाषंढोवाजीवःसर्वगतोव्ययः एकएवाद्वितीयोयमाकाशवदलेपकः १६ नित्योज्ञानमयःशुद्धःसकथंशोकमर्हति १६ तारोवाच देहोचित्काष्ठवद्रामजीवोनित्यश्चिदात्मकः सुखदुःखादिसंबंधःकस्यस्याद्राममेवद १७ श्रीरामउवाच ॥ अहंकारादिसंबंधोयावद्देहेंद्रियैःसह संसारस्तावदेवस्यादात्मनस्त्वविवेकिनः १८ श्रीरामप्रस·

एवनतुसुखादिपरिणामवान् एवंसतिसुखादिसंबंधःकस्यस्यात् अचेतनत्वान्नस्थूलस्यसूक्ष्मस्यनाप्यपरिणामित्वादात्मनइत्यर्थः १७ उत्तरयति अहंकारादीति देहेंद्रियैःसहतेषुइत्यर्थः अहंकारादिसंबंधः अहंममेत्येवंबुद्धिविषयताइत्यर्थःआ यः स्थूलसूक्ष्मदेहयोरुभयोरप्यहंबुद्धिरेवकेषांचित्तुस्थूलदेहेपुत्रादौचममताबुद्धिःसूक्ष्मेतुसर्वेषामहंबुद्धिरेवेतिविवेकः तावदे वाविवेकिनोंतःकरणादिभ्यः स्वस्मिन्विवेकाग्रहवतआत्मनः संसारः स्यादित्यर्थः १८ श्रीसीतारामचंद्राभ्यांनमोनमः

एवंशब्दस्यात्मनोन्याविवेकादारोपितः संसारः स्वतएवनविनिवर्त्तते यथास्वप्नस्यमिथ्यागमः स्वाप्नमिथ्यापदार्थदर्शनंनस्वतोनि- वर्ततेकिंतुजाग्रदवस्थयैवतद्वदितिभावः १९ तत्रस्वप्नस्यविषयध्यानवत्संसारस्यमूलकारणमाह अनादीति अविद्याअनात्म- न्यात्मबुद्धिर्मायावाअयथार्थकः अत्यंतमिथ्याभूतः २० मनएवेतिमनोन्त्रांतःकरणंसंसारस्तन्मूलकारणमित्यर्थः बंधः कर्त्रादि भोगस्तद्वत् मनएवमनसासमानत्वंआत्ममनसोरैक्यंतद्वतबंधभाक्तद्वतबंधयुक्तोभवतीत्यर्थः २१ २२ बुद्धीति यथालक्तका- दिसामीप्यात्स्फटिकस्यरक्तत्वादिव्यवहारः एवंसंसारधर्मकबुद्धींद्रियादिसामीप्यादात्मनोबलादवशतः संसारव्यवहारोलोकैःक्रिय तइत्यर्थः तदेवाह्यत्वेतिमनसोजडत्वेनज्ञानादिजनकत्वासंभवात् चेतनस्यात्मनोलिंगमनुमापकंमनोंतःकरणंपरिगृह्यतेनाविवे

मिथ्यारोपितसंसारोनस्वयंविनिवर्त्तते विषयान्ध्यायमानस्यस्वप्नेमिथ्यागमोयथा १९ अनाद्य- विद्यासंबंधात्तत्कार्याहंकृतेस्तथा संसारोपार्थकोपिस्याद्रागद्वेषादिसंकुलः २० मनएवहिसंसा रोबंधश्चैवमनःशुभे आत्मामनःसमानत्वमेत्यतद्वतबंधभाक् २१ यथाविशुद्धःस्फटिकोलक्त- कादिसमीपगः तत्तद्वर्णयुगाभातिवस्तुतोनास्तिरंजनं २२ बुद्धींद्रियादिसामीप्यादात्मनःसं सृतिर्बलात् आत्मास्वलिंगंतुमनःपरिगृह्यतदुद्भवान् २३ कामान्जुषन्गुणैर्बद्धःसंसारेवर्ततेव- शः आदौमनोगुणान्सृष्ट्वाततःकर्माण्यनेकधा २४ शुक्ललोहितकृष्णानिगतयस्तत्समानतःएवंक र्मवशाज्जीवोभ्रमत्याभूतसंप्लवम् २५ श्रीसीतारामचंद्राभ्यांनमोनमः ७ ७ ७ ७

कंप्राप्यतदुद्भवान्ततोजातान्कामान्विषयान्जुषन् गुणैस्तदीयैरागद्वेषादिभिर्बद्धइवावशःसंसारेवर्तते २३ विषयाणां मनउद्भवत्वंदर्शयति आदाविति गुणान्रागद्वेषादीन्ततोरागद्वेषादिभिः कर्माणिसृष्ट्वेवदितिशेषः २४ तत्रकर्मभेदानाह शु- क्लेत्यादिशुक्लकर्माणि हिंसादिरहितजपध्यानादिरूपाणिलोहितानिहिंसामिश्रयागादीनिकृष्णानिपापकर्माणितत्समानतःक र्मस्वरूपतुल्यागतयोगतीःसृष्ट्वेवदितिशेषःगतयइतिद्वितीयार्थेआर्षम् तत्रशुक्लकर्मणःशुक्लाब्रह्मलोकप्राप्तिरूपोत्तमाग- तिःलोहितकर्मणोमध्यमास्वर्गगतिःकृष्णकर्मणोधमानरकगतिरित्यर्थः भूतसंप्लवःप्रलयस्तावत्पर्यंतंकर्मवशाद्भ्रमति २५

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

सर्वेपिसंहृतोप्रालयेवासनाभिः कर्मभिश्चसहाभिनिवेशतः अंतःकरणादितादात्म्याध्यासात् अंतःकरणादिप्रकृतिभूताना द्यविद्यावशगस्तल्लीनःसन्तिष्ठति २६ वासनाश्चमानसानिकर्माणिचतैः सहतद्युक्तएवजातेवर्षाकालेमंडूकवत्प्रादुर्भवति एवंसृष्टिप्रलययोर्घटीयंत्रमिवावर्तमानस्तिष्ठति २७ नन्वेवमस्यमुक्तिंप्रत्याशैवनकिन्नेत्याह यदेतिमद्विषयामतिःईश्वरोमहानित्येवंबुद्धिर्जायतेइतिशेषः २८ ततःईश्वरविषयबुद्ध्यनंतरम् ततःस्वरूपविज्ञानंस्वरूपंविज्ञायतेतेन ततः विषयेषु अनित्याशुचिदुःखरूपंवैराग्यंनित्यानित्यविवेकादिचजायतेइत्यर्थः २९ तदातादृशवैराग्यादौजातेआचार्यप्रसादेनतत्त्व

सर्वेपिसंहृतोजीवोवासनाभिःस्वकर्मभिः अनाद्यविद्यावशगास्तिष्ठत्यभिनिवेशतः २६ सृष्टिका
लेपुनःपूर्ववासनामानसैःसह जायतेपुनरप्येवंघटीयंत्रमिवावशः २७ यदापुण्यविशेषेणलभ
तेसंगतिंसतां मद्भक्तानांसुशांतानांतदामद्विषयामतिः २८ मत्कथाश्रवणेश्रद्धादुर्लभाजायतेत
तः ततःस्वरूपविज्ञानमनायासेनजायते २९ तदाचार्यप्रसादेनवाक्यार्थज्ञानतःक्षणात् देहेंद्रिय
मनःप्राणाहंकृतिभ्यःपृथक्स्थितम् ३० स्वात्मानुभवतःसत्यमानंदात्मानमद्वयम् ज्ञात्वासद्योभ
वेन्मुक्तःसत्यमेवमयोदितं ३१ एवंमयोदितंसम्यगालोचयतियोनिशम् तस्यसंसारदुःखानिन-
स्पृशंतिकदाचन ३२ त्वमप्येतन्मयाप्रोक्तमालोचयविशुद्धधीः नस्पृश्यसेदुःखजालैःकर्मबंधाद्वि
मोक्ष्यसे ३३

मस्यादिवाक्यार्थज्ञानतः श्रवणमननरूपात् क्षणात् उत्सवात् श्रवणादिविषयोत्साहात्पुनः पुनरनुष्ठानादितियावत् देहादिभ्यःपृथक्स्थितंसत्यमानंदरूपमद्वितीयमात्मानंस्वात्मानुभवतःस्वात्मविषयादीदृशंब्रह्माहमेवेत्येवंरूपान्निदिध्यासनात् ज्ञात्वाअपरोक्षीकृत्यसद्यस्तत्कालमेवसंसारान्मुक्तोभवेदित्यर्थः ३० ३१ आलोचयतियुक्त्यानिर्णयति तस्य क्रमेणज्ञानप्राप्त्यासंसारदुःखास्पर्शः ३२ कर्मबंधात् कर्मकृतात् बंधात् संसाररूपादित्यर्थः ३३ श्रीरामायनमः



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

मेमयारूपंदर्शितंस्वरूपंदर्शितमित्यर्थः अत्रताराये भगवताविश्वरूपदर्शनंकारितमितिध्वनयति यद्वादर्शितमित्थंबोधितमित्यर्थः
३४ मद्रूपंपरिदृश्यमानंरूपंदर्शितंविश्वरूपंच अलोचयविचारयप्रवाहपतितंसंसारप्रवाहपतितंकार्यंसांसारिकंकार्यंकुर्वत्यपिन
दोषैर्नलिप्यसेइत्यर्थः ३५ देहाभिमानजंदेहेअहंममइत्याकारकाभिमानाज्जातं ३६ जीवन्मुक्तातदवस्थापरमात्मनारामेण
सद्गुरुत्वात्क्षणसंगमेनैवसापितिर्यग्योनिरपिताराअनादिबंधंसंसाररूपंनिर्धूयनिरस्कृत्यविकल्मषानिःपापाकृतामुक्ताजीव

पूर्वजन्मनितेसुभ्रुकृतामद्भक्तिरुत्तमा अतस्तवविमोक्षायरूपंमेदर्शितंशुभे ३४ ध्यात्वामद्रूपम-
निशमालोचयमयोदितम् प्रवाहपतितंकार्यंकुर्वत्यपिनलिप्यसे ३५ श्रीरामेणोदितंसर्वंश्रुत्वाता-
रातिविस्मिता देहाभिमानजंशोकंत्यक्त्वानत्वारघूत्तमम् ३६ आत्मानुभावसंतुष्टाजीवन्मुक्ताबभूवह-
क्षणसंगममात्रेणरामेणपरमात्मना ३७ अनादिबंधंनिर्धूयमुक्तासापिविकल्मषा सुग्रीवोपिच
तच्छ्रुत्वारामवक्त्रात्समीरितं ३८ जहावज्ञानमखिलंस्वस्थचित्तोभवत्तदा ततःसुग्रीवमाहेदंरामोवा
नरपुंगवम् ३९ भ्रातुर्ज्येष्ठस्यपुत्रेणयद्युक्तंसांपरायिकम् कुरुसर्वंयथान्यायंसंस्कारादिममाज्ञ
या ४० तथेतिबहुभिर्मुख्यैर्वानरैःपरिणीयतम् वालिनंपुष्पकेक्षिप्त्वासर्वराजोपचारकैः ४१ भेरी
दुंदुभिनिर्घोषैर्ब्राह्मणैर्मंत्रिभिःसह यूथपैर्वानरैःपौरैस्तारयाचांगदेनच ४२ गत्वाचकारतत्सर्वंयथा
शास्त्रंप्रयत्नतः स्नात्वाजगामरामस्यसमी मंत्रिभिःसह ४३ नत्वारामस्यचरणौसुग्रीवःप्राहहृ
ष्टधीः राज्यंप्रशाधिराजेंद्रवानराणांसमृद्धिमत् ४४ दासोहंतेपादपद्मंसेवेलक्ष्मणवच्चिरम् इत्यु
क्तोराघवःप्राहसुग्रीवंसस्मितंवचः ४५

मुक्ताचकृता ३७ ३८ ३९ सुग्रीवंकिमाहेत्यत्राह भ्रातुरितिज्ये
ष्ठस्यभ्रातुर्यत्सांपरायिकम् पारलौकिकंकृत्यंतत्पुत्रेणांगदेनकुरुकारयेत्यर्थः ननुभवच्छत्रोःकथमस्माभिःसंस्कारादिकार्यं
तत्राह ममाज्ञयेति ४० तथेतीत्यस्यांगीकृत्येतिशेषः परिणीयउत्थाप्य पुष्पकेपुष्पकविमानातुल्येवाहनेसर्वराजोपचारकैर्युक्तंवा
लिनंक्षिप्त्वा ४१ ४२ तन्मृतोचितसंस्कारादि ४३ वानराणांराज्यंप्रशाधीत्यन्वयः ४४ ४५ श्रीसीतारामाभ्यांनमोनमः

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

त्वमेवाह अनेनत्वयाक्रियमाणराज्यभोगएवममभोगइतिसूचितं किंवानासक्तोराज्यंभुंक्तइईश्वरमैरितोहंराज्यंकुर्वेइतिमत्याच ताह
तयाबुध्याक्रियमाणयाक्रिययाभगवान्तुष्यत्वेवेतिध्वनितं पुर राज्याधिपत्येकिष्किंधापुरराज्याधिपत्ये ४६ तर्हिमदभिषेककाले
तत्रसंनिधानंकुर्विति चेत्तत्राह नगरमिति पत्तनंनगरं ४७ अहंचनगरस्यसमीपेपर्वतस्यशिखरेवत्स्यामीत्यन्वयः ४८ वर्षे
दिवसान्वर्षाकालं ततःराज्याभिषेकानंतरंकिंचित्कालंवर्षासमयंस्वपुरेस्थित्वासीतायाःपरिमार्गणेऽन्वेषणेयत्नवान्भवेत्यः

त्वमेवाहंनसंदेहःशीघ्रंगच्छममाज्ञया पुरराज्याधिपत्येत्वंस्वात्मानमभिषेचय ४६ नगरंनप्रवेक्ष्या
मिचतुर्दशसमाःसखे आगमिष्यतिमेभ्राताऽलक्ष्मणःपत्तनंतव ४७ अंगदंयौवराज्येत्वमभिषेचय
सादरम् अहंसमीपेशिखरेपर्वतस्यसहानुजः ४८ वत्स्यामिवर्षदिवसान्ततस्त्वंयत्नवान्भव-
किंचित्कालंपुरेस्थित्वासीतायाःपरिमार्गणे ४९ साष्टांगंप्रणिपत्याहसुग्रीवोरामपादयोः यदा-
ज्ञापयसिदेवत्वंतत्तथैवकरोम्यहं ५० अनुज्ञातस्तुरामेणसुग्रीवस्तुसलक्ष्मणः गत्वापुरंतथाचक्रेय
थारामेणचोदितः ५१ सुग्रीवेणयथान्यायंपूजितोलक्ष्मणस्तदा आगत्यराघवंशीघ्रंप्रणिपत्यो
पतस्थिवान् ५२ ततोरामोजगामाशुलक्ष्मणेनसमन्वितः प्रवर्षणगिरेरूर्ध्वंशिखरंभूरिविस्तरं
५३ तत्रैकंगह्वरंदृष्ट्वास्फाटिकंदीप्तिमच्छुभं वर्षवातातपसहंफलमूलसमीपगम् वासायरोच
यामासतत्ररामःसलक्ष्मणः ५४ दिव्यमूलफलपुष्पसंयुतेमौक्तिकोपमजलौघपल्वले चित्रव
र्णमृगपक्षिशोभितेपर्वतेरघुकुलोत्तमोऽवसत् ५५ इतिश्रीम॰ रामा॰ उमाम॰ किष्किंधाकांडेतृ-
तीयःसर्गः ३ श्रीमहा॰ उवा॰ तत्रवार्षिकदिनानिराघवोलीलयामणिगुहासुसंचरन् पक्वमूलफ-
लभोगतोषितोलक्ष्मणेनसहितोवसत्सुखं १ न्वयः ४९ ५० चोदितःप्रेरितः ५१ ५२ ५३ गह्वरंगुहांफलमूलानिस

मीपगानियस्यतत् ५४ मौक्तिकोपमजलौघोजलसमूहोयेषुतादृशानिपल्वलानियस्मिन्तादृशेपर्वतेइत्यर्थः नानावर्णैर्मृगैःपक्षि
भिश्चशोभिते ५५ इतिश्रीम॰ सेतौकिष्किंधाकांडेतृतीयसर्गः ३ तत्रपर्वतेइत्यर्थः वार्षिकदिनानिव्याप्येतिशेषः अवसदित्यन्वयः १



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

वातप्रेरितजलपूर्णमेघान् अंतरेमध्येस्तनितफक्तवैद्युतंविद्युत्समूहोगर्भेयेषांतान् आहितरुक्कांचन्यः कक्षाःपृष्ठास्तरणानि
येषांतादृशान् गजयूथान्यद्भुतानिववीक्ष्यविस्मयमगात् अत्रगजाबृंहितमुक्ताबोध्याःअतएवस्तनितेनाधिक्यम् २
नवघासंस्तृणंविस्फारितेक्षणाभगवत्सौंदर्यदर्शनायेतिभावः ३ तादृशाःसंतोध्याननिष्ठामुनीश्वराइवनचलंतिराममित्या-

वातनुन्नजलपूरितमेघानंतरस्तनितवैद्युतगर्भान् वीक्ष्यविस्मयमगाद्गजयूथान्यद्भदाहितरु-
कांचनकक्षान् २ नवघाससमास्वाद्यत्दृष्टपुष्टमृगद्विजाः धावंतःपरितोरामंवीक्ष्यविस्फारि
तेक्षणाः३ नचलंतिसदाध्याननिष्ठाइवमुनीश्वराः राममानुषरूपेणगिरिकाननभूमिषु ४ चरं
तंपरमात्मानंज्ञात्वासिद्धगणाअपि मृगपक्षिगणाभूत्वाराममेवानुसेविरे ५ सौमित्रिरेकदा-
राममेकांतेध्यानतत्परम् समाधिविरमेभक्त्याप्रणयाद्विनयान्वितः ६ अब्रवीद्देवतेवाक्यात्
पूर्वोक्ताद्विगतोमम अनाद्यविद्यासंभूतःसंशयोहृदिसंस्थितः ७ इदानींश्रोतुमिच्छामिक्रिया
मार्गेणराघव भवदाराधनंलोकेयथाकुर्वंतियोगिनः ८ इदमेवसदाप्राहुर्योगिनोमुक्तिसाधनं
नारदोपितथाव्यासोब्रह्माकमलसंभवः ९ ब्रह्मक्षत्रादिवर्णानामाश्रमाणांचमोक्षदम् स्त्री-
शूद्राणांचराजेंद्र सुलभंमुक्तिसाधनम् तवभक्तायमेभ्रात्रेब्रूहिलोकोपकारकम् १० श्रीरा
मउवाच ममपूजाविधानस्यनांतोस्तिरघुनंदन तथापिवक्ष्येसंक्षेपाद्यथावदनुपूर्वशः ११
स्वगृह्योक्तप्रकारेणद्विजत्वंप्राप्यमानवः सकाशात्सद्गुरोर्मंत्रंलब्ध्वामद्भक्तिसंयुतः १२ श्रीराम

नुत्तरान्वयितत्रैतेचरंतोमृगपक्षिगणानकिंतुसिद्धगणाइत्यपकृतिर्व्यंग्या ४ ५ ६ अनादिभूतयाविद्ययासंभूतोजातः
संशयोविगतइत्यन्वयः ७ क्रियामार्गेणलौकिकपुष्पादिभिःपूजारूपेणयथातत्प्रकारविशिष्टेनपूजामार्गेणयोगिनोभवदारा-
धनंकुर्वंतितच्छ्रोतुमिच्छामीत्यन्वयः ८ इदमेवक्रियामार्गेणाराधनमेव योगिनएवाह नारदइत्यादि ९ येमत्प्रम् १० ११ द्विजत्वं
उपनयनसंस्कारंप्राप्यत्क्त्वांतयोरव्ययपोःप्राप्यलब्ध्वाएतयोराराधयेदित्यनेनान्वयः १२ श्रीसीतारामचंद्राभ्यांनमोनमः ॥

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

पूजास्थानान्याहहृदयइत्यादिस्वहृदयदेशइत्यर्थः इदंचमूर्त्यादीनामपिस्मृत्युक्तानामुपलक्षणं अनलेवन्हौप्रतिमादौप्रतिमा
स्वर्णरूप्यादिमयीआदिनाब्राह्मणोविभावसौसूर्यमंडलेअर्चयेत्पूजयेत् १३ प्रातःस्नानमितिसकलप्रातःकृत्योपलक्षणं १४ वेदेति
द्विजोवेदोदितैः शूद्रादिस्तंत्रोदितैःमृल्लेपनंसकलस्नानविधेरुपलक्षणं तेनस्नानंकुर्वन्नित्यन्वयःसंध्यादिनाहोमतर्पणादि १५ मम
पूजकोमद्बुद्ध्याभक्त्यास्वगुरुंपूजयेदित्यन्वयः अत्रगुर्वसान्निध्येपिध्यानेनजलादौगुरुंपूजयेदितिसंप्रदायः १६ शिलायांशिला
निर्मितप्रतिमायां प्रतिमासुमृदारुआदिनिर्मितास्वित्यर्थः प्रसिद्धैःस्मृतिप्रसिद्धैः तेनतन्निषिद्धपुष्पादिपूजानर्हमितिसूचितम्·

तेनसंदर्शितविधिर्मामेवाराधयेत्सुधीः हृदयेवानलेवार्चेत्प्रतिमादौविभावसौ १३ शालिग्रामशिला
यांवापूजयेन्मामतंद्रितः प्रातःस्नानंप्रकुर्वीतप्रथमंदेहशुद्धये १४ वेदतंत्रोदितैर्मंत्रैर्मृल्लेपनविधानतः
संध्यादिकर्मयन्नित्यंतत्कुर्याद्विधिनाबुधः १५ संकल्पमादौकुर्वीतसिद्ध्यर्थंकर्मणांसुधीः स्वगुरुं
पूजयेद्भक्त्यामद्भक्त्यापूजकोमम १६ शिलायांस्नपनंकुर्यात्प्रतिमासुप्रमार्जनम् प्रसिद्धैर्गंधपु
ष्पाद्यैर्मत्पूजासिद्धिदायिका १७ अमायिकोनुवृत्त्यामांपूजयेन्नियतव्रतः प्रतिमादिष्वलंकारःप्रि
योमेकुलनंदन १८ अग्नौयजेतहविषाभास्करेस्थंडिलेयजेत् भक्तेनोपहृतंप्रीत्यैश्रद्धयाममवा
र्यपि १९ किंपुनर्भक्ष्यभोज्यादिगंधपुष्पाक्षतादिकं पूजाद्रव्याणिसर्वाणिसंपाद्यैवंसमारभेत् २०

तेचनिषेधानिबंधेषुद्रष्टव्याविस्तरभयान्नेहलिखिताः १७ अमायिकःमायादंभादिरूपातद्रहितः अनुवृत्त्यागुरूपदिष्टमार्गा
नुवर्तनेनप्रतिमादिषुप्रतिमाश्चतेआदयश्चप्रतिमादयः तेषुप्रतिमादिषुप्रतिमारूपेषुआदिषुआश्रयेषुपूजाधिकरणेष्वित्य
र्थः तत्पुरुषः समानाधिकरणःकर्मधारयः प्रतिमारूपेष्वाश्रयेषु आदिशब्दआश्रयवाचीप्राण्यादिश्चवसुयोधनइत्यादौप्रसिद्धः
अलंकारःपुष्पादिरूपः१८ आधारांतरेपूजाविशेषमाहाग्नाविति अग्नौतत्तद्देवतामंत्रेणहोमएवतत्तद्देवतापूजेत्यर्थः भास्करेस्थंडि
लेयजेदितिभास्करेयजेदित्ययत् तत्तदाकारेस्थंडिलेइत्यर्थः भक्तेनश्रद्धयोपहृतंवार्यपिममप्रीत्यैभवतीतिशेषः अनेनभक्तेरेवस
र्वत्वंदर्शितं १९ भक्ष्यादिकमुपहृतंप्रीत्यैइतिकिंपुनर्वक्तव्यमित्यर्थः समारभेत्पूजामितिशेषः २०श्रीसीतारामाभ्यांनमः राम्



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

तत्रपूजाप्रकारमाह चैलेति अधःकुशासनंतदुपर्यजिनंतदुपरिचैलमितिक्रमः तत्रोपविश्यपद्मासनाद्यन्यतमासनेनेत्यर्थः देवस्यसंमुखेइत्यनेनस्थिरासुप्रतिमासुपश्चिमाद्यभिमुखतयापिपूजाभवतीतिसूचितम् २१ मातृकाअकारादिपंचाशद्वर्णात्मिकाः तन्यासप्रकारश्चतंत्रे स्फुटः बहिरितिबहिर्न्यासमांतरंन्यासंचेत्यर्थः केशवादिचतुर्विंशतिनामभिरित्यर्थः सच नारदपांचरात्रादौस्पष्टः तत्त्वन्यासोपितत्रैवोक्तः २२ मन्मूर्त्तिपंजरन्यासोविष्णुपंजरस्तोत्रोक्तोमहान्यासइतिसंप्रदायः मंत्रन्यासंमंत्रवर्णैस्तत्तत्कल्पोक्तंषडंगादिन्यासंप्रतिमादावपीतियथात्मनितथादेवइत्यर्थः २३ ईषद्वामभागावच्छिन्नपुरोभागेक

चैलाजिनकुशैःसम्यगासनंपरिकल्पयेत् तत्रोपविश्यदेवस्यसंमुखेशुद्धमानसः २१ ततोन्यासं प्रकुर्वीतमातृकाबहिरांतरम् केशवादिततःकुर्यात्तत्त्वन्यासंततःपरम् २२ मन्मूर्तिपंजरंन्यासं मंत्रन्यासंततोन्यसेत् प्रतिमादावपितथाकुर्यान्नित्यमतंद्रितः २३ कलशंस्वपुरोवामेक्षिपेत्पुष्पादिदक्षिणे अर्घ्यपाद्यप्रदानार्थंमधुपर्कार्थमेवच २४ तथैवाचमनार्थंतुन्यसेत्पात्रचतुष्टयम् हृत्पद्मेभानुविमलेमत्कलांजीवसंज्ञिताम् २५ ध्यायेत्स्वदेहमखिलंतयाव्याप्तमरिंदम तामेवावाहयेन्नित्यंप्रतिमादिषुमत्कलाम् २६ पाद्यार्घ्याचमनीयाद्यैःस्नानवस्त्रविभूषणैः यावच्छक्योपचारैर्वात्वर्चयेन्मामर्मायया २७ विभवेसतिकर्पूरकुंकुमागरुचंदनैः अर्चयेन्मंत्रवन्नित्यंसुगंधकुसुमैःशुभैः २८

कलशंजलपूर्णंस्थापयेदितिशेषः पुष्पादिदक्षिणेक्षिपेत्स्थापयेदित्यर्थः अर्घ्यादिपात्रस्थापनदेशाःस्मृतौउक्तः अर्घ्यपात्रंतुवायव्येनैर्ऋत्यांपाद्यपात्रकम् मध्येतुमधुपर्कस्योदेशोत्वाचमनीयकमिति २४ जीवसंज्ञितांमत्कलामित्यनेनचेतनःसर्वत्रैकएवेतिबोधितम् युक्तंचैतत् व्यापकेनैकेनैवचेतनोपपत्तावनेकतत्कल्पनायांमानाभावात् प्रतिकर्मव्यवस्थात्वंतःकरणभेदेनैवोपपन्नेतिहृत्पद्मेतांध्यायेत् २५ तयाव्याप्तमखिलंस्वदेहंभावयेत् तथाभावयित्वातामेवमत्कलांप्रतिमादिष्वावाहयेत् नतुदावाहनेनतामपिचेतनत्वेनध्यात्वा २६ यावच्छक्यैरुपचारैर्वाषोडशभिःपंचभिर्वातुःपादपूरणार्थः अमाययाअदंभादिनामांपूजयेत् २७ विभवेसतिकर्पूरादिभिःसुगंधपुष्पैश्चमंत्रवदर्चयेत् २८

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

आगमोक्तांअगस्त्यसंहितोक्तांप्रकारयेत्प्रकुर्वीतेत्यर्थः नीराजनैरितिपाठक्रमादर्थक्रमस्यबलवत्वाद्धूपदीपनैवेद्यनीराजनानीतिक्रमः नीराजनंपंचारार्तिकादिभिः २९ तद्रूपादिभ्रन्द्वयोपहरेद्दद्यात् यतोहंश्रद्धात्मकश्रद्धादत्तभोक्ता ३० अगस्त्येनेति अगस्त्यसंहितोक्त मार्गेणकृतंयत्कुंडंतेनतस्मिन्नित्यर्थः अधिकरणस्यकरणत्वविवक्षयातृतीयामूलमंत्रेणआगमोक्तेनपुंसूक्तेनपुरुषसूक्तेन एतद्ब्राह्मणविषयं ३१ तद्विषयेएवाहाथवौपासनाग्नाविति चरुणाहविषाहवीरूपेणचरुणा ३२ ध्यायेन्मामितिशेषः पार्षदेभ्यःतंत्रोक्त हन्मदादिभ्यः ३३ मांध्यायन्स्मरन्नित्यस्यमन्त्रवर्णानितिशेषः तदेवाह यत्तवागिति अनेनप्रशस्ततरोमानसोजपउक्तः मुखवासंत

दशावरणपूजांवैत्यागमोक्तांप्रकारयेत् नीराजनैर्धूपदीपैर्नैवेद्यैर्बहुविस्तरैः २९ श्रद्धयोपहरेन्नित्यंश्रद्धात्मभुगहमीश्वरः होमंकुर्यात्प्रयत्नेनविधिनामंत्रकोविदः ३० अगस्त्येनोक्तमार्गेणकुंडेनागमवित्तमः जुहुयान्मूलमंत्रेणपुंसूक्तेनाथवाबुधः ३१ अथवौपासनाग्नौवाचरुणाहविषातथा तप्तजांबूनदप्रख्यंदिव्याभरणभूषितं ३२ ध्यायेदनलमध्यस्थंहोमकालेसदाबुधः पार्षदेभ्योबलिंदत्वाहोममशेषंसमापयेत् ३३ ततोजपंप्रकुर्वीतध्यायन्मांयतवाक्स्मरन् मुखवासंचतांबूलंदत्वाप्रीतिसमन्वितः ३४ मदर्थेनृत्यगीतादिस्तुतिपाठादिकारयेत् प्रणमेद्दंडवद्भूमौहृदयेमांनिधायच ३५ शिरस्याधायमद्दत्तंप्रसादंभावनामयम् पाणिभ्यांमत्पदेमूर्ध्निगृहीत्वाभक्तिसंयुतः ३६ रक्षमांघोरसंसारादित्युक्त्वाप्रणमेत्सुधीः उद्वासयेद्यथापूर्वंप्रत्यग्ज्योतिषिसंस्मरन् ३७

द्रूपकर्पूरादियुक्तंतांबूलंदत्वेत्यर्थः ३४ मदर्थेमत्प्रीतयेइत्यर्थः कारयेत्कुर्वीतेत्यर्थः निवृत्तप्रेषणास्मिन्च दंडवदित्यनेनाष्टांगप्रणामउक्तः ३५ भावनामयंमद्दत्तंप्रसादंशिरसिआधायस्थापयित्वाअनेनमत्त्वंप्रसादंपुष्पादिरूपंभगवान्ददातीतिभावनयाप्रसादंगृण्हीयादितिसूचितंतंगृहीत्वाशिरसिस्थापयित्वाभावनाभावितेमत्पदेपाणिभ्यांस्वमूर्ध्निगृहीत्वाधृत्वा ३६ इत्युक्त्वाप्रणमेदित्यन्वयः प्रत्यग्ज्योतिषित्हृदयस्थेयतएवध्याताजीवकलाप्रतिमायामावाहितापूर्वंतत्रैवोद्वासयेत् तत्रैवप्रविष्टांध्यायेत् एतदेवविसर्जनम् ३७ ॐ ॐ ॐ ॐ ॐ ॐ



CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

इहामुत्रचऐहिकिंलौकिकींपारलौकिकींचेत्यर्थः ३८ मद्भक्तोयदिमामेवंध्यात्वाआवाह्यचदिनेदिने प्रतिदिनंममपूजांकरोतितदाममसारूप्यं प्राप्नोति ३९ सनातनंपूर्वपूर्वैरप्येवमेवानुष्ठितं ४० शेषांशाय लक्ष्मणाय ४१ प्राकृतवत् मद्भक्तिकार्यमनुष्यवत् मायामालंब्यदुःखि तइत्यनेनस्वतस्तस्यदुःखलेशोपिनेतिसूचितं ४२ एकांतेइतिमंत्रत्वादेकांतेकथनम् ४३ अनुत्तमः नविद्यतेउत्तमंयस्मादित्यर्थः

एवमुक्तप्रकारेणपूजयेद्विधिवद्यदि इहामुत्रचसंसिद्धिंप्राप्नोतिमदनुग्रहात् ३८ मद्भक्तोयदिमामेवं
पूजांचैवदिनेदिने करोतिममसारूप्यंप्राप्नोत्येवनसंशयः ३९ इदंरहस्यंपरमंचपावनंमयैवसाक्षात्क
थितंसनातनं पठत्यजस्रंयदिवाशृणोतियःससर्वपूजाफलभाङ्नसंशयः ४० एवंपरात्माश्रीरामः
क्रियायोगमनुत्तमं पृष्टःप्राहस्वभक्तायशेषांशायमहात्मने ४१ पुनःप्राकृतवद्रामोमायामालंब्य
दुःखितः हासीतेतिवदन्नेवनिद्रांलेभेकथंचन ४२ एतस्मिन्नंतरेतत्रकिष्किंधायांसुबुद्धिमान् ह
नूमान्प्राहसुग्रीवमेकांतेकपिनायकम् ४३ शृणुराजन्प्रवक्ष्यामितवैवहितमुत्तमं रामेणतेकृतःपू
र्वमुपकारोह्यनुत्तमः ४४ कृतघ्नवत्त्वयानूनंविस्मृतःप्रतिभातिमे त्वत्कृतेनिहतोवालीवीरस्त्रैलो
क्यसंमतः ४५ राज्येप्रतिष्ठितोसित्वंतारांप्राप्तोसिदुर्लभां सरामःपर्वतस्याग्रेभ्रात्रासहवसन्सुधीः
त्वदागमनमेकाग्रमीक्षतेकार्यगौरवात् त्वंतुवानरभावेनस्त्रीसक्तोनावबुध्यसे ४७ करोमीतिप्रति
ज्ञायसीतायाःपरिमार्गणम् नकरोषिकृतघ्नस्त्वंहन्यसेवालिवद्द्रुतं ४८ हनूमद्वचनंश्रुत्वासुग्रीः
वोभयविह्वलः प्रत्युवाचहनूमंतंसत्यमेवत्वयोदितं ४९ शीघ्रंकुरुमदाज्ञांत्वंवानराणांतरस्विनाम्
सहस्राणिदशेदानींप्रेषयाशुदिशोदश ५० श्रीसीतारामचंद्राभ्यांनमोनमः ॥ ॥ ॥ ॥

४४ उपकारमेवाह त्वत्कृतेइति ४५ दुर्लभांताराम् इतिवालीपरिग्रहात्त्वयासर्वथाकामिभावेनद्रष्टुमप्यशक्यामित्यर्थः ४६ ए काग्रंतन्मात्रचित्तत्वंयथाभवतितथाईक्षतेप्रतीक्षतेकार्यस्यसीतान्वेषणरूपस्यगौरवात् तदेकसाध्यत्वादित्यर्थः ४७ कृतघ्नस्त्वं यदिनकरोषितदावालिवत्हन्यसेरामेणेतिशेषः अतःसर्वथान्वेषणमुचितमितिव्यंग्यं ४८ ४९ वानराणांमदाज्ञांकुरुबोधय ५० ॥

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

आज्ञामाह सप्तेति ५१ इत्याज्ञाप्य एवं वानरेषु कर्तव्यामाज्ञां बोधयित्वा ५२ ५३ अगणिता गुणाः सत्वं पराक्रमश्च येषां तान्पर्वताकारसह
शं रूपमाकारो येषां तान्पवनस्य वायोरहं तोतिप्रियः कुमारो हनूमान्दानमानादितः सान्त्वनेनावश्यं कार्यसिद्धिकारत्वं दर्शितम् ५४ इति
श्रीसेतौ कि० चतुर्थः सर्गः ४ रामस्त्विति पर्वताग्रे स्थितो मणियुक्तसानौ शिखरे १ नजानेनशक्नोमीत्यर्थः धातूनामनेकार्थत्वात् २

सप्तद्वीपगतान्सर्वान्वानरानानयंतु ते पक्षमध्ये समायांतु सर्वे वानरपुंगवाः ५१ ये पक्षमतिवर्तंते तेवध्यामे
ध्यामे नृसंशयः इत्याज्ञाप्य हनूमंतं सुग्रीवो गृहमाविशत् ५२ सुग्रीवाज्ञां पुरस्कृत्य हनूमान्मंत्रिसत्तमः
तत्क्षणे प्रेषयामास हरीन्दशदिशः सुधीः ५३ अगणितगुणसत्वान्वायुवेगप्रचारान्वनचरगण-
मुख्यान्पर्वताकाररूपान् पवनहितकुमारः प्रेषयामास दूतानतिरभसतरात्मा दानमानादितुष्टान् ५४
इति श्रीमदध्यात्मरामायणे उमामहे० किष्किंधाकांडे चतुर्थः सर्गः ४ श्रीमहादेव उवाच रा-
मस्तु पर्वतस्याग्रे मणिसानौ निशामुखे सीताविरहजं शोकमसहन्निदमब्रवीत् १ पश्य लक्ष्मण मे सीता
राक्षसेन हृता बलात् मृतामृता वा निश्चेतुं न जाने द्यापि भामिनीम् २ जीवतीति मम ब्रूयात्कश्चिद्वा प्रि
यकृत्तमे यदि ज्ञानामितां साध्वीं जीवतीं यत्र कुत्र वा ३ हठादेवाहरिष्यामि सुधामिव पयोनिधेः प्रतिज्ञां
शृणु मे भ्रातर्येन मे जनकात्मजा ४ नीता तं भस्मसात्कुर्यां सपुत्रबलवाहनं हे सीते चंद्रवदने वसती राक्षसा
लये ५ दुःखार्ता मामपश्यंती कथं प्राणान्धरिष्यसि चंद्रोपि भानुवद्भाति मम चंद्रानना विना ६ चंद्र त्वं
जानकीं स्पृष्ट्वा करैर्मां स्पृश शीतलैः सुग्रीवोपि दयाहीनो दुःखितं मां न पश्यति ७ श्रीसीताराम ॥

यः कश्चिदपि जीवतीति ब्रूयात् समे प्रियकृत् यत्र कुत्र वा यत्र कुत्रापीत्यर्थः ३ ४ वसंती त्वं कथं प्राणान् धरिष्यसीत्यन्वयः
५ विरहदुःखमभिनयति चंद्रोपीति भानुवत् दाहकत्वात् ६ चंद्र त्वमिति कर्पूरतोप्यतिशीतलस्य मम कामदुःखशामक- १३
स्य तद्गात्रस्य स्पर्शेन त्वकरा अपि तथागुणशैत्ययुक्ता भूत्वा मां सुखयिष्यंतीति भावः विरहवेदनासहत्वादेव सुग्रीवं निंदति सुग्रीवो
पीति ७ राम ❀ ❀ ❀ ❀ ❀

CC-0. In Public Domain.Kavikulguru Kalidas Sanskrit University Ramtek Collection

